# कामनापञ्चकम्

योऽत्रावतीर्य शकलीकृतदैत्यकीर्त-
    इर्योऽयं च भूसुरवरार्चित-रम्यमूर्तिः ।
तद्दर्शनोत्सुकधियां कृततृप्तिपूर्तिः
    सीतापतिर्जयति भूपतिचक्रवर्ती ॥ १॥

ब्राह्मी मृतेत्यविदुषामपलापमेतत्
    सोढुं न चाऽर्हति मनो मम निःसहायम् ।
वाच्छाम्यनुप्लवमतो भवतः सकाशा-
    च्छ्रुत्वा तवैव करुणार्णवनामराम ॥ २॥

देशद्विषोऽभिभवितुं किल राष्ट्रभाषा
    श्रीभारतेऽमरगिरं विहितुं खरारे ।
याचामहेऽनवरतं दृढसङ्घशक्तिं
    नूनं त्वया रघुवरेण समर्पणीया ॥ ३॥

त्वद्भक्तिभावितहृदां दुरितं द्रुतं वै
    दुःखं च भो यदि विनाशयसीह लोके ।
गोभूसुरामरगिरां दयितोऽसि चेत्वं
    नून तदा तु विपदं हर चिन्तितोऽद्य ॥ ४॥

बाल्येऽपि पितृवचसा निकषा मुनीशान्
    गत्वा रणेऽप्यवधि येन च ताटिकाऽऽख्या ।
निर्भर्त्सिताश्च जगतीतलदुष्टसङ्घाः
    श्रीर्वेदवाक्प्रियतमोऽवतु वेदवाचम् ॥ ५॥

इति कामनापञ्चकं सम्पूर्णम् ।